व्यभिचारोपलंभेन कथमिदं व्याप्तिग्राहकमिति चेन्न सहचारज्ञानपदेन व्यभिचारज्ञानविरहसहकृत
सहचारज्ञानस्यैवाभिमतत्वात् व्यभिचारज्ञानं च द्विविधं यथार्थं च नद्यपि द्विविधं निश्चयः शंका च तद्वि
रहः क्वचित्तर्कात् यथा धूमाग्न्योर्व्याप्तिग्रहे धूमो वह्निव्यभिचारी न वेति शंकायां धूमो वह्निव्यभिचारी
ति निश्चये वा यदि धूमो वह्निव्यभिचारी स्यात्तदा वह्निजन्यो न स्यादिति धूमाग्न्योः कार्यकारणभंगप्रसं
तर्कः गरूपः यदि भवति तदेतस्मादेव तत्र व्यभिचारज्ञानं निवर्तते अतस्तत्र तर्कादेव व्यभिचारज्ञानविरहः क्व

स्वयमेव भूयोदर्शनेन यत्र धूमस्तत्राग्निरिति महानसादौ व्याप्तिं गृहीत्वा पर्वतं गतस्त
द्गते चाग्नौ संदिहानः धूमं पश्यन् व्याप्तिं स्मरति यत्र धूमस्तत्राग्निरिति तदनंतरं वह्नि
व्याप्यधूमवानयं पर्वत इति ज्ञानमुत्पद्यते अयमेव लिंगपरामर्श इत्युच्यते तस्मात् पर्वतो
वह्निमानिति ज्ञानमनुमितिरुत्पद्यते तदेतत् स्वार्थानुमानं यत् स्वयमेव धूमादग्निमनुमाय
परं बोधयितुं पंचावयववाक्यं प्रयुज्यते तत् परार्थानुमानम्

चित्त्वतः सिद्ध एव यथा यदा न धूमे व्यभिचारज्ञानं तदा यत्र धूमस्तत्राग्निरिति धूमत्वावच्छिन्नाग्नि
त्वावच्छिन्नव्याप्याद् इति अथ यद्देशांतरीयाणां धूमानामिंद्रियसन्निकर्षासंभवेन कथं धूमसामा
न्येऽग्निसामान्यव्याप्तिग्रहः इति चेन्न धूमत्ववह्नित्वरूपसामान्यलक्षणप्रत्यासत्त्यैव सकल
धूमाग्निज्ञानसंभवेन तत्र व्याप्तिग्रहस्यापि संभवात् महानसादावित्ति महानसाद्यवच्छेदेन

धूमः इत्यर्थः तज्ज्ञाने च पर्वतनिष्ठे वह्निशङ्का वा व्याप्तिकालेऽनुभूतं प्रवृत्तिव्याप्तिज्ञानस्य कारणत्वेन तत्पूर्व
दर्शने पर्वतादौ महानसादौ च गृहीतव्याप्तेः कथं ज्ञानमत आह व्याप्तिं स्मरतीति तथा च धूमदर्श
नरूपोद्बोधककबलाद्व्याप्तिस्मरणसंभवात् च तदनन्तरं भवतीति व्याप्तिस्मरणानन्तरमित्यर्थः लिङ्गपरा
मर्श इति व्याप्तिबलेनालीनमर्थं गमयतीति लिङ्गं तस्य धूमादेः परामर्शो ज्ञानविशेष इत्यर्थः
तस्मादिति लिङ्गपरामर्शादित्यर्थः स्वार्थमुपसंहरति तदेतदिति यस्मादिदं स्वप्रतिपत्तिहेतु
स्तस्मादेतत्स्वार्थानुमानमित्यर्थः क्रमप्राप्तं परार्थानुमानमाह यदिति यत्त्वं चावयववाक्यं तत्प
रार्थानुमानमिति संबन्धः अवयवत्वं नाम न्यायसमवायिकारणत्वं प्रतिज्ञादिषु तदसंभवात्
कथमेते अवयवाः स्युरिति चेदनुमानवाक्यैकदेशत्वादवयववदवयवा इत्युपचर्यन्ते इति । लिंग
हारान्नं चेत्साधयं च पञ्चावयववाक्यस्यानुमानत्वमेव न विचारसहं तस्य ... प्रयोजकलिंगप्रति
पादकत्वेनानुमानमित्युपचारमात्रत्वात् तत्र परामर्शस्याभावादिति केचित् ... तदुदाहरति यथेति
तथा च यस्मिन्निति अयं च पर्वतस्तथा वह्निव्याप्यधूमवानित्यर्थः तस्मात्तथेति वह्निव्याप्यधूमवत्त्वाद्वह्निमानि
त्यर्थः अनेन पञ्चावयववाक्येनेत्यर्थः इति परार्थानुमानं त्वनुमानावयवाः कथमित्यत्र केन पञ्चावयवाः
प्रतिज्ञाद्युपधानं प्रतिज्ञेति प्रतिज्ञा ... साध्यविशिष्टपक्षबोधकवचनं प्रतिज्ञा तं
वमन्तं तृतीयान्तं वा लिंगवचनं हेतुः व्याप्तिप्रतिपादकदृष्टान्तवचनमुदाहरणं उदाहरणं व्याप्तिविशि
ष्टस्य हेतोः पक्षधर्मताप्रतिपादकवचनमुपनयः पक्षे साध्यस्याबाधितत्वप्रतिपादकं वचनं निगमनं इदमेव लेखनं

लिंगपरामर्श
लोमादीनदृति
शिवं०
वंलिं
गपरा
३२ मपूर्णं

द्दि इति निधाय प्रतिज्ञादीन्विशिष्य दर्शयति पर्वतो वह्निमानित्यादिना इत्यवयवग्रन्थः ज्ञायमानं लिंगमनुमितिकरणमिति वृद्धोक्तं न युक्तं इदानीं यज्ञशाला वह्निमती अतीतेन धूमादित्यादौ लिंगाभावेप्यनुमिति दर्शनादित्यभिप्रायवान् लिंगपरामर्शस्य करणत्वमित्याचष्टे लिंगपरामर्श एवेति अनुमानमुपसंहरति तस्मादिति अनुमितिकरणत्वादित्यर्थः स्वयमेवाद्य तीयज्ञानमित्युच्यते तथा हि महानसादौ धूमाग्न्योर्व्याप्तिग्रहकारणीयधूमज्ञानं तदादिमं पक्षे यद्धूमज्ञानं अत्रैव वह्निव्याप्यत्वेन यद्धूमज्ञानं तत्तृतीयं

यथा पर्वतोग्निमान्धूमवत्त्वात् यो यो धूमवान्स सोग्निमान् यथा महानसः तथा चायं तस्मात्तथेति अनेन प्रतिपादिताल्लिंगात्परोप्यग्निं प्रतिपद्यते प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि पंचावयवाः पर्वतोग्निमानिति प्रतिज्ञा धूमवत्त्वादिति हेतुः यो यो धूमवान्स सोग्निमानित्युदाहरणं तथा चायमित्युपनयः तस्मात्तथेति निगमनं स्वार्थानुमितिपरार्थानुमित्योर्लिंगपरामर्श एव करणं तस्माल्लिंगपरामर्शोनुमानं लिंगं त्रिविधं अन्वयव्यतिरेकी केवलान्वयी केवलव्यतिरेकि चेति

इदमेव लिंगपरामर्श इत्युच्यते मीमांसकास्तु धूमवान्पर्वत इति पक्षधर्मताज्ञानं धूमो वह्निव्याप्य इति व्याप्तिस्मरणं ताभ्यामेवानुमितिकरणं न तु लिंगपरामर्शो विशिष्टज्ञानस्याप्रयोजकत्वादिति जल्पन्ति न किंचिदेतत् वह्निव्याप्यधूमवान्पर्वत इति ज्ञाने हेतुयादृशानुमित्यापत्तेः व्याप्यत्वेन रूपेण धूमस्याभानात् ननु व्याप्यतावच्छेदकरूपेणोपहेतोः पक्षवृत्तित्वज्ञानं विवक्षितमिति तन्मात्र व्याप्यतावच्छेदकानुसंधानेपि वह्निव्याप्यवानयं पर्वत इति शाब्दजन्यशाब्दपरामर्शादनुमित्यनापत्तेः व्यापारवत्कारणं करणमिति मते व्याप्तिज्ञानं

६२॥

त्माको ह्यायो तां क्रमेणाभिनयति यत्रेति तयान्वयव्याप्तिरूपदर्शितेव व्यतिरेकव्याप्तिश्च ॥

व्याप्ति २४

सेचं० अन्वयव्यतिरेकिणो लक्षणमाह अन्वयेनेति अन्वयो यावान् प्रयोज्यत्वमर्थः साध्यसाधनयोः साहचर्यमन्वयः
तदभावयोः साहचर्यं व्यतिरेकः अन्वयप्रयोज्यव्याप्तिमद्व्यतिरेकप्रयोज्यव्याप्तिमदन्वयव्यतिरेकीत्यर्थः उदाहर

३३ ति यथेति धूमवत्त्वमिति धूमवत्त्वमन्वयव्यतिरेकि लिंगमित्यर्थः ननु कथमत्रान्वयव्याप्तिर्व्यतिरेकव्याप्तिश्च साध्याभा
वव्यापकीभूताभावप्रतियोगित्वमित्यर्थः केचित्तु साध्याभावसाधनाभावयोर्व्याप्तिर्व्यतिरेकव्याप्तिः अ
न्यतिरिक्तव्याप्त्या कथं साधनादनुमितिरिति चेत् साध्याभावव्यापकीभूताभावप्रतियोगित्वेन साधनस्य

अन्वयेन व्यतिरेकेण च व्याप्तिमदन्वयव्यतिरेकि यथा वह्नौ साध्ये धूमवत्त्वं यत्र धूमस्तत्राग्निरित्य
न्वयव्याप्तिः यत्र वह्निर्नास्ति तत्र धूमोऽपि नास्ति यथा महाह्रद इति व्यतिरेकव्याप्तिः अन्वयमात्रव्या
प्तिकं केवलान्वयि यथा घटोऽभिधेयः प्रमेयत्वात् पटवदित्यत्र प्रमेयत्वाभिधेयत्वयोर्व्यतिरेकव्याप्ति
८३ रेकव्याप्तिर्नास्ति सर्वस्यापि प्रमेयत्वादभिधेयत्वाच्च व्यतिरेकमात्रव्याप्तिकं केवलव्यतिरेकि यथा पृथि
वीतरेभ्यो भिद्यते गन्धवत्त्वात् यदितरेभ्यो न भिद्यते न तद्गन्धवत् यथा जलं न चेयं तथा तस्मान्न
तथेति अत्र यद्गन्धवत्तदितरेभ्यो भिन्नमित्यन्वयदृष्टान्तो नास्ति पृथिवीमात्रस्य पक्षत्वात्

प्रिव

पक्षवृत्तित्वज्ञानं सहकारीति न दुष्टं व्याप्यव्यापकभावो हि भावयोर्यादृशस्तादृशस्तयोरभावयोस्तस्माद्विपरीतः
प्रतीयते अन्वये साधनं व्याप्यं साध्यं व्यापकमिष्यते साध्याभावोऽन्यथा व्याप्यो व्यापकः साधनात्ययः इत्याहुः
अन्वयदृष्टान्तस्य सत्त्वाद्व्यतिरेकदृष्टान्तमाह यथा महाह्रद इति यद्यन्वयव्याप्तेः प्रागुपदर्शितत्वात् पुनस्त
दर्शनमनुचितं तथापि तदानीं तस्याः स्फुटत्वेनाप्रदर्शितत्वान्न दोषः केवलान्वयिनो लक्षणमाह अन्वयेति ३३

अन्वयेनैव व्याप्तिर्यस्मिन्स तथा उदाहरति यथेति प्रमेयत्वाभिधेयत्वयोर्व्यतिरेकव्याप्तिर्न शक्येति अत्रेति अभिधेयत्वसाधका
नुमानइत्यर्थः ननु कुतस्तत्र व्यतिरेको नास्तीत्यत आह सर्वस्येति पदार्थमात्रस्येत्यर्थः तथा च सकलपदाभिधेयत्वस्येश्वरप्रमाविषय
त्वस्य चात्यंताभावाप्रतियोगित्वरूपकेवलान्वयित्वेन तदभावाप्रसिद्ध्या न हि तत्र व्यतिरेकव्याप्तिर्नसंभवत्येतिभावः केवल
व्यतिरेकिणो लक्षणमाह व्यतिरेकेति पूर्ववत्समासोनुसंधेयः उदाहरति यथेति नन्वेवं तथेति इयं पृथिवीनन्तरयोर्गंधाभाव
वतीत्यर्थः तस्मान्नघटितगंधाभाववत्त्वाभावादितरभेदाभाववतीनेत्यर्थः नन्वत्र किमितिनान्वयव्याप्तिरित्याशंक्य परिहरति
अत्रेति इतरभेदसाधकानुमानइत्यर्थः इदमुपलक्षणं जीवच्छरीरं सात्मकं प्राणादिमत्त्वात् यन्नैवं तन्नैवं यथा घटः प्रत्य
क्षादिकं प्रमाणमिति व्यवहर्तव्यं प्रमाकरणत्वात् यन्नैवं तन्नैवं यथा प्रत्यक्षाभासः विवादास्पदमाकाशमिति व्यवहर्तव्यं
शब्दवत्त्वादित्यादिकमपि केवलव्यतिरेकी दृष्टव्यं अथेतरभेदः प्रसिद्धो न वा नाद्यः यत्र प्रसिद्धः तत्र गंधवत्त्वस्यापि सत्त्वे
के तोयमस्मष्ठिरासिद्धीराभिधेकः तदधिकरणस्यैवान्वयदृष्टांतत्वेन केवलव्यतिरेकत्वव्याघातः यदि तत्र नास्ति गंध
वत्त्वं तदा तस्य साधारणत्वापत्तिः न द्वितीयः विशिष्टबुद्धौ विशेषणज्ञानस्य हेतुत्वेन पृथिवी इतरभेदवतीति साध्यवि
शिष्टानुमित्यनुत्पत्तेः विशेषणीभूतेतरभेदस्याप्रसिद्धात् तस्याप्यप्रसिद्धेः न च केवलमिदमेव दूषणं किंतु व्यतिरेक
व्याप्तिज्ञानस्यासंभवेन दूषणांतरस्यापि जागरूकत्वात् कथं तदसंभव इति चेन्न तज्जनकेतरभेद
भावज्ञानस्यायोगात् तस्माद्वक्तव्यं इति चेन्न तादृशज्ञानकारणीभूतेतरभेदज्ञानाप्रसिद्धेः न च क्वचित् कथं
तत्र कारणमिति अभावज्ञाने प्रतियोगिज्ञानस्य कारणत्वात् इति भावः गंधवत्वं जलभेदस्य तेजसि तेजोभेदस्य जले प्रसि

सि॰ चं॰ टी॰

७७

रीत्या हृतर [illegible] भेदस्य प्रत्येकाधिकरणाप्रसिद्ध्या पृथिव्यां तत्तद्घटत्वस्य शङ्का धनीयतया तद्विशिष्टानुमितिसंभवात्
सुतरां व्यतिरेकव्याप्तिज्ञानमपि संभवति इतरभेदपटलस्य पक्षातिरिक्तेऽप्रसिद्धत्वेन नान्वयदृष्टान्तस्य तत्र इतरावगमसा
धारणमपीति कृतं पल्लवितेन अत्रेदं बोध्यं अन्वयव्यतिरेकि तु पञ्चरूपोपपन्नं नानिकान्तिकमिति चेत् उक्तानां पक्षधर्मत्वं
सपक्षे सत्त्वं विपक्षाद्व्यावृत्तिः अबाधितविषयत्वं असत्प्रतिपक्षत्वं चेति पञ्च लक्षणानि अबाधितः साध्यरूपविष
योऽस्य स तत्तथोक्तः तस्य भावस्तत्त्वं एवं साध्याभावसाधकं हेत्वन्तरं सत्प्रतिपक्ष इत्युच्यते स नास्ति यस्य सोऽसत्प्रतिपक्ष
स्तस्य भावस्तत्त्वमिति बोध्यं केवलान्वयिनस्तु चतुरूपोपपन्नत्वमेव स्वसाध्यं साधयितुं क्षमते तस्य विपक्षाविपर्ययेण
तद्व्यावृत्तिविपर्ययात् केवलव्यतिरेकस्य तथात्वमसपक्षविपर्ययेण तत्सत्त्वविपर्ययादित्यप्रपञ्चितं भोमान्
सपक्षत्वादित्यत्र किं नाम पक्षत्वं तत्र पक्षायां तानिर्वक्ति संदिग्धेति अयं पक्षवचनमा [illegible] तेन नमे घानुमितिस्तत्र व्याप्तेः
वह्निप्रत्यक्षकाले नाप्यनुमितिर्जायते मेसनुमित्साजन्यानुमितिस्थले न तत्र संदिग्धसाध्याभावादिति चे
न्न एतन्मते तत्रानुमितेरस्वीकारात् तदुक्तं नानुपलब्धे न निर्णीतेऽर्थे न्यायः प्रवर्तते अपि तु संदिग्धार्थ एवेति अथ
वा सिषाधयिषाविरहविशिष्टसिद्ध्यभावः पक्षता साधयितुमिच्छा सिषाधयिषा तस्या विरहोऽभावस्तद्विशि
ष्टा या सिद्धिः साध्यनिश्चयस्तदभावः पक्षतेति तत्रार्थः वर्तते व्याप्त्यनुमितिप्राक्कालेऽपर्वते तदानीं सिषाध
यिषाभावात् सिद्ध्यभावात् अभावमात्रेन पक्षतापर्वते वह्निमनुमिनुयामिति सिषाधयिषायाः प्रत्यक्षकाले क्व
चित्सत्त्वेऽप्यनुमित्यापत्तिः तदानीं यत्किंचिदभावस्य सत्त्वात् असुसिद्ध्यभावः एव सतिं चेत् पर्वते गम्यानुमितिर्मे भूयादिति

सि॰ चं॰

३४

इच्छाकाले सिद्धिसत्त्वेप्यनुमितिर्जायते सा न स्यात्तदानीं सिद्ध्यभावाभावात् अतः सिषाधयिषाविरहविशिष्टत्वं सिद्धावावश्यकं तथा चानुमितौ सिषाधयिषाविरहविशिष्टसिद्धिरेव प्रतिबंधिका तदभावः कारणमिति फलितमिति दिक्॥ इति पक्षताप्रसंगात्सपक्षविपक्षौ क्रमेण निरूपयति निश्चितेति तत्रैवेति धूमवत्त्वे हेतावेवेत्यर्थः शवमग्रेपि हेतुन्निरूपणप्रसंगाद्धेत्वाभासान्निरूपयति सव्यभिचारेति उपदर्शितरूपाणां मध्ये कतिपयरूपोपपन्नत्वाद्धेतुवद्भासंत इति हेत्वाभासाः तत्त्वं चानुमितितत्करणान्यतरप्रतिबं

सा २०

संदिग्धसाध्यवान्पक्षः यथा धूमवत्त्वे हेतौ पर्वतः निश्चितसाध्यवान्सपक्षः यथा तत्रैव महानसः निश्चितसाध्याभाववान्विपक्षः यथा तत्रैव महाह्रदः सव्यभिचारविरुद्धसत्प्रति पक्षासिद्धबाधिताः पंच हेत्वाभासाः

धकयथार्थज्ञानविषयत्वं बाधस्थले वह्निरनुष्ण इत्यनुमितिप्रतिबंधकं यद्ज्ञानमुष्णत्ववद्द्रव्यवह्न्यनुष्णत्वसाधकं द्रव्यत्वमित्याकारकं तद्विषयत्वस्य द्रव्यत्वरूपहेत्वाभासे सत्त्वात् लक्षणसमन्वयः इत्थमसाधारणविरुद्धसत्प्रतिपक्षज्ञानस्यापि साक्षादनुमितिप्रतिबंधकत्वं वोध्यम् वाधकसाध्याभाववद्विशिष्टः पक्षो वा वह्निमान्प्रमेयत्वादित्यादौ व्यभिचारिणि पर्वतो वह्निमानित्याद्यनुमितिकरणं वह्निव्याप्यप्रमेयत्वमित्यादिज्ञानं तत्प्रतिबंधकं च वह्न्यभाववद्वृत्तिप्रमेयत्वमिति ज्ञानं तद्विषयत्वस्य प्रमेयत्वादौ सत्त्वात् लक्षणसंगतिः इत्थमनुपसंहारिप्रभृतिज्ञानानामनुमितिकरणप्रतिबंधकत्वं वोध्यम् वाधकमममाद्यासद्धेतुवारणाय यथार्थेति दिक् इति हेत्वा

दि२

बालान्बोधयितुं प्राचीनसंकेतमाह अनैकान्तिक इति तत्त्वं च साधारणधर्मवत्त्वं विभजते स त्रिविध इति साधारणत्वं लक्षयति
तत्रेति साधारणान्तृतीय मध्य इत्यर्थः उदाहरति यथेति ननु प्रमेयत्वस्य कथं साध्याभाववद्वृत्तित्वमत स्तद्रूपपादयति प्रमेय
त्वस्येति अयमत्र हृदेति प्रमक्रिरितिमासम्भृदर्थः सपक्षवृत्तित्वस्यापि निवेशात् अयमपि स्वरूपासिद्धे दूषणं जागर्ति
इति मा वह गर्भे पक्षवृत्तित्वस्यापि निवेशात् असाधारणं लक्षयति सर्वेति सर्वेषु सपक्षविपक्षेभ्यो व्यावर्तते निवर्तते
इति व्यावृत्तः नित्येभ्यः सपक्षेभ्य आकाशादिभ्यः अनित्येभ्यो विपक्षेभ्यो घटादिभ्य इत्यर्थः अनुपसंहारिणं लक्षयति

सव्यभिचारोऽनैकान्तिकः स त्रिविधः साधारणासाधारणानुपसंहारिभेदात् तत्र साध्याभाववद्वृत्तिः
साधारणोऽनैकान्तिकः यथा पर्वतो वह्निमान्प्रमेयत्वादिति प्रमेयत्वस्य वह्न्यभाववति ह्रदे विद्यमानत्वात्
सर्वसपक्षविपक्षव्यावृत्तः पक्षमात्रवृत्तिरसाधारणः यथा शब्दो नित्यः शब्दत्वादिति शब्दत्वं सर्वेभ्यो नित्येभ्यो
अनित्येभ्यो व्यावृत्तं शब्दमात्रवृत्तिः अन्वयव्यतिरेकदृष्टान्तरहितोऽनुपसंहारी यथा सर्वमनित्यं प्रमेयत्वा
दित्यत्र सर्वस्यापि पक्षत्वान्न दृष्टान्तो नास्ति साध्याभावव्याप्तो हेतुर्विरुद्धः यथा शब्दो नित्यः कृतकत्वादिति
कृतकत्वं हि नित्यत्वाभावेनानित्यत्वेन व्याप्तं साध्याभावसाधकं हेत्वन्तरं यस्य स सत्प्रतिपक्षः यथा शब्दो नित्यः

सा१ गि

अन्वयेति अत्रेति उपदर्शितानुमान इत्यर्थः इति सव्यभिचारनिरूपणम् विरुद्धं लक्षयति साध्येति कृतकत्वात्कार्यत्वा
दित्यर्थः अनित्यत्वेन व्याप्तमिति नियतसाहचर्यात् कृतकं तत्तदनित्यमिति व्याप्तेर्भवति भावः सत्प्रतिपक्षं लक्षयति साध्ये
ति यस्येति यस्य हेतोः साध्याभावसाधकं साध्याभावस्यानुमापकं हेत्वन्तरं प्रतिपक्षी हेतुर्विद्यते स हेतुः सत्प्रतिपक्ष इ
त्यर्थः अयमेव प्रकरणसम इत्युच्यते असिद्धं विभजते आसिद्ध इति आश्रयासिद्धाद्यन्यतमत्वमसिद्धत्वं त्रिविधं दर्शयति
आश्रयासिद्ध इति आश्रयासिद्धत्वं च पक्षतावच्छेदकाभाववत्त्वं भवति हि अरविन्दं गगनीयत्वं पक्षतावच्छेदकाभा

नौ

पक्षे   दो४

वक्तव्यं अरविंदे गगनीयत्वविरहात् तत्राश्रयासिद्धमुदाहरतीति चेत् ननु कथमरविंदे गगनीयत्वविरहात् तत्राश्रयासिद्धत्वे तिउपदर्शितानुमा
नद्वयेऽपि: स्वरूपासिद्धमुदाहरतीति स्वरूपेति पक्षावृत्तित्वं स्वरूपासिद्धत्वं इदमेव लक्षणं मनसि निधायोपपादयति अत्रेति तथा च चाक्षुषत्वं
शब्दे नास्ति इत्यनेन चाक्षुषत्वे पक्षावृत्तित्वमर्पयता तन्मिति भावः अथ शब्दे न कुतश्चाक्षुषत्वमत आह शब्द इति सोऽयं स्वरूपासिद्धः शु
द्धासिद्धभागासिद्धविशेषणासिद्धविशेष्यासिद्धभेदेन बहुविधः तत्राद्यस्तु दर्शितः द्वितीयो यथा उद्भूतरूपादिचतुष्टये गुणः रूपत्वादि
त्यत्र रूपत्वहेतोः पक्षैकदेशावृत्तित्वेन भागस्वरूपासिद्धत्वं तृतीयो यथा वायुः प्रत्यक्षः रूपवत्त्वे सति स्पर्शवत्त्वात् इत्यत्र रूपवत्त्वविशे
षणस्य वायाववृत्तेः सद्विशिष्टस्पर्शवत्त्वेऽपि तथात्वेन तस्य स्वरूपासिद्धत्वं निर्वहति विशेषणाभावे विशिष्टस्याप्यभावात् तुरीयो यथा

श्रावणत्वान्न शब्दत्ववदिति असिद्धस्त्रिविधः आश्रयासिद्धः स्वरूपासिद्धः व्याप्यत्वासिद्धश्चेति तत्राश्रयासिद्धो यथा ग
गनारविंदं सुरभि अरविंदत्वात् सरोजारविंदवदिति अत्र गगनारविंदं आश्रयः स च नास्त्येव स्वरूपासिद्धो यथा शब्दो गु
णश्चाक्षुषत्वादिति अत्र चाक्षुषत्वं शब्दे नास्ति शब्दस्य श्रावणत्वात् सोपाधिको व्याप्यत्वासिद्धः साध्यव्यापकत्वे स
ति साधनाव्यापक उपाधिः साध्यसमानाधिकरणात्यन्ताभावाप्रतियोगित्वं साध्यव्यापकत्वं साधनवन्निष्ठात्यन्ता
भावप्रतियोगित्वं साधनाव्यापकत्वं पर्वतो धूमवान् वह्निमत्त्वादित्यत्र आर्द्रेंधनसंयोग उपाधिः यत्र धूमस्तत्रार्द्रेंधनसं
योगः इति साध्यव्यापकता यत्र वह्निस्तत्रार्द्रेंधनसंयोग इति नास्ति अयोगोलके तदभा
वात् एवं साध्यव्यापकत्वे सति साधनाव्यापकत्वात् आर्द्रेंधनसंयोग उपाधिः

अत्रैव विशेषणविशेष्यवैपरीत्येन हेतुस्तस्य स्वरूपासिद्धत्वं विशेष्याभावप्रयुक्तविशिष्टाभावादिति बोध्यं व्याप्यत्वासिद्धं नि
रूपयति सोपाधिक इति ननु कोऽयमुपाधिरत आह साध्येति ननु किं तर्हि साध्यव्यापकत्वं साधनाव्यापकत्वं चात आह क्रमेण
निरूपयति साध्येति लक्ष्ये लक्षणं योजयति यत्र धूम इति उपाधिभेदमादायासंभववारणाय व्यापकशरीरेऽत्यन्तपदम् आद्यं सा
धनभेदमादाय साधनस्योपाधित्ववारणाय व्यापकशरीरेऽप्यत्यन्तपदमावश्यकं द्वेयं इत्युपाधिमुपसंहरति एवमिति उक्तरीत्या सर्वः
सोऽयमुपाधिस्त्रिविधः केवलसाध्यव्यापकः पक्षधर्मावच्छिन्नसाध्यव्यापकः साधनावच्छिन्नसाध्यव्यापकश्चेति तत्राद्यो दर्शितः एवं क्रमेणेतर

त०टी०च०

३६

तस्य यत्र धर्मसाधनत्वं तत्र निषिद्धत्वमिति साध्यव्यापकता यत्र हिंसात्वं तत्र निषिद्धत्वमिति तेन निषिद्धत्वमुपाधिः साधनाव्यापकः क्रतु
हिंसायां निषिद्धत्वस्याभावात् मा हिंस्यात्सर्वा भूतानीति सामान्यवाक्यतः पशुना यजेतेत्यादिविशेषवाक्यस्य बलीयस्त्वात् श्रुतौ हिंसात्वेन
धर्मसाधनत्वे प्रयोजकमपि तु निषिद्धत्वमेवेत्यादिकमपि द्रष्टव्यं द्वितीयो यथा वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वादित्यत्रोद्भूतरूपवत्व
मुपाधिस्तस्य यत्र प्रत्यक्षत्वं तत्रोद्भूतरूपवत्त्वमिति न केवलं साध्यव्यापकत्वं रूपे व्यभिचारात् किं तु द्रव्यत्वलक्षणो यः पक्षधर्मस्तदवच्छि
न्नवह्निः प्रत्यक्षत्वं यत्र तत्रोद्भूतरूपवत्त्वमिति पक्षधर्मावच्छिन्नसाध्यव्यापकत्वमेव आत्मनि व्यभिचारवारणाय वह्निःपदं यत्र प्रत्यक्ष
स्पर्शाश्रयत्वं तत्रोद्भूतरूपवत्त्वमिति साधनाव्यापकत्वं च वायावुद्भूतरूपाभावात् तृतीयो यथा प्रागभावो विनाशी जन्यत्वादित्य
त्र भावत्वमुपाधिः तस्य यत्र विनाशित्वं तत्र भावत्वमिति न केवलं साध्यव्यापकत्वं प्रागभावे भावत्वविरहात् किं तु जन्यत्वरूपसाध
नावच्छिन्नविनाशित्वं यत्र तत्र भावत्वमिति साधनावच्छिन्नसाध्यव्यापकत्वमेवास्ति यत्र जन्यत्वं तत्र न भावत्वमिति साधनाव्या

सोपाधित्वात् वह्निमत्त्वं व्याप्यत्वासिद्धम्

पकत्वं ध्वंसे भावत्वविरहात् ध्वंसप्रागभावाभ्यामनयत्वात् इत्यत्र शाकपाकजत्वमुपाधिः श्यामत्वस्य नीलघटेऽपि सत्त्वात्
न केवलसाध्यव्यापकत्वं किं तु साधनावच्छिन्नसाध्यव्यापकत्वमेव अत्र श्यामपुत्रे शाकपाकजत्वविरहेण साधनाव्यापकत्वं चेत्यादिक
मपि द्रष्टव्यं यथा वह्निमान् धूमवत्त्वादित्यत्र महानसत्वाभावोऽप्युपाधिः स्यात् तस्य महानसान्यत्वलक्षणपक्षधर्मावच्छिन्नसा
ध्यव्यापकत्वादिति चेन्न पक्षधर्मेत्यत्र पक्षदृष्टान्तोभयसाधारणधर्मस्यैव विवक्षितत्वात् अन्यथा तादृशं गतमिदमुपाधिलक्षण
मिति चेन्न निरवच्छिन्नसाध्यपक्षदृष्टान्तोभयसाधारणधर्मसाधनान्यतरावच्छिन्नसाध्यान्यतरव्यापकत्वे सति साधना
व्यापक उपाधिरिति तस्य परिष्कर्तव्यत्वात् इदं च लक्षणमाचार्याणामेवाभिमतं लक्षणान्तरं तु गुप्तात्तरस्यादृष्टव्यं इत्युपाधिभेदः
नन्वेतावतोपाधिरूपगतः किं तर्हि व्याप्यत्वासिद्धं प्रत्युत आह वह्निमत्त्वमिति तत्र हेतुः सोपाधिकत्वादिदं स्थमुपदर्शितं हेतं वाद
दृश्यः इत्यसिद्धनिरूपणमबाधितं लक्षयति यस्येति अयं कालात्ययापदिष्ट इत्युच्यते स्पर्शनेन त्वगिन्द्रियेण स्पर्शः रूपं घटः

81

शि०व०

३६

ति२

खड्गपदवाच्य इत्युपमितिरुत्पद्यते अत्र नास्ति कालसम्बन्धं गमेवा सा धारणा धर्मः ततो यंयपाउष्ट्रः कीदृगिति पृष्टे ऽम्बादिवदस
मानष्ट्रो नातिहृस्वग्रीवशरीरश्चेत्याप्तेन रितेकालोत्तरेण तत्पिंडदर्शनादेवे धर्म्याविशिष्टपिंडज्ञानं ततो निदेशवाक्यार्थस्मर
णतउष्ट्उष्ट्रपदवाच्य इत्युपमितिरुत्पद्यते इत्यादिनन्वापूर्ववाक्यजन्यत्वाच्छाब्दबोध एवास्त्विति चेन्नउपमिनोमीत्यनुव्यवसायस्य
पलापप्रसंगादिति सर्वंरमणीयम् इति तृतीयपरिच्छेदे उपमानखंडः अवसरसंगतिमभिप्रेत्योपमानानंतरं शब्दं निरूपयति आ
प्तेति शब्द इति शब्दः प्रमाणमित्यर्थः भ्रांतविप्रलंभकयोर्वाक्यस्य शब्दप्रमाणत्ववारणाय आप्तेति [illegible] वाक्यमि
तिननु कोयमाप्त इत्यत आह आप्तस्त्विति यथार्थवक्ता यथार्थभूतो वाधितार्थोपदेष्टा ननु वाक्यं किमत आह वाक्यमिति
पदेलच्चयतिशक्तमिति निरूपकतासंबंधेन शक्तिविशिष्टमित्यर्थः अथ शक्तिं निरूपयति ननु रेव केत्यत आह अस्मादिति
घटपदात्घटरूपोऽर्थो बोधव्य इतीश्वरेच्छैव शक्तिरित्यर्थः अर्थस्मृत्यनुकूलपदपदार्थसंबंधत्वं तल्लक्षणं साचपदा

आप्तवाक्यं शब्दः आप्तस्तु यथार्थवक्ता वाक्यं पदसमूहः यथा गामानयेति शक्तं पदं अस्मात्पदादयमर्थो बोधव्य इतीश्वरसंकेतः शक्तिः

र्थांतरमिति मीमांसकाः तन्नमानाभावात् आधुनिकेनाप्यपिराकादशेहनिपितानाम कुर्यादितीश्वरेच्छास्यैव न त्वाधुना
धुनिकसंकेतितडित्थादिपदे थ्वीश्वरेच्छाया अभावादिच्छैव शक्तिरिति भणंति शक्तिग्रहश्च वृद्धव्यवहाराद्भवति तथाहि उत्त
मवृद्धेन घटमानयेति वाक्यप्रयुक्ते मध्यमवृद्धो घटमानयति तदवलोक्य व्युत्पित्सुर्बालो न्वयव्यतिरेकाभ्यां घटमान
यतिवाक्यजन्यत्वेन मध्यमवृद्धप्रवृत्तिकज्ञाने निश्चिनोति ततो गामानय घटं नयेति वाक्यांतरेण एवमावापोद्वापाभ्यां घट
पदस्य घटत्वावच्छिन्ने शक्तिं गोपदस्य गोत्वावच्छिन्ने इति तां गृह्णाति एवमसति बाधके धातुप्रकृतिप्रत्ययादीनां श
क्तिग्रहो व्याकरणाद्भवति क्वचिदुपमानादितोऽपि तदुक्तं शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद्व्यवहारतश्च वाक्य
स्य शेषाद्विवृतेर्वदंति सान्निध्यतः सिद्धपदस्य वृद्धाः इति यवमयश्चरुर्भवतीत्यत्र यवपदस्य दीर्घशूकविशेषे
वसंते सर्वसस्यानां जायते पत्रशातनं मोदमानाश्च तिष्ठंति यवाः कणिशशालिनः इति वाक्यशेषाच्छक्तिरवधार्यते हस्ती घृ
[illegible]तो यस्य गजो घूर्णतीति विवरणाद्धस्तिपदस्य गजे शक्तिग्रहः विवरणं च समानार्थबोधकपदांतरेण तदर्थकथन

शक्ति २

शिव०

३७

ग्राहिकः सत्त्वादिसाध्यादरपि बाधितः अयं सोऽयं घटः इति प्रत्यभिज्ञारूपप्रत्यक्षेण गृहीतक्षणिकत्वलक्षणसाध्याभावस्य परिच्छिन्नत्वात् इ
ति दुष्टलक्षणमपि हेत्वाभासेष्वव्याप्यत्वाति प्रसक्तं लक्षणं व्याप्यत्वासिद्धेंतर्भवति तत्र साधारणधर्मस्योपाधिः अव्याप्तं लक्षणं
नुमागासिद्धेंतर्भवति असंभवग्रस्तलक्षणानुस्वरूपासिद्धेंतर्भवति सिद्धसाधनं त्वाश्रयासिद्धेंतर्भवति संदिग्धसाध्यवत्तयावा
श्रयत्वान्नन्वास्तु नस्य दूषितत्वेन सिद्धसाधनं निग्रहस्थानान्तरमिति वदंति ॥ इति श्रीसिद्धांततत्त्वीयपरिच्छेदे अनुमानखंडं समाप्तम्
अवसरसंगतिमभिप्रेत्यानुमानानंतरमुपमानं निरूपयति उपमिती ति उपमितेः करणमुपमानमित्यर्थः तच्च सादृश्यज्ञा
नमिति निवेदयिष्यत्तिन नूपमितिरेव कात आह संज्ञेति संज्ञा पदं संज्ञी चार्थस्तयोः संबंधो वाच्यत्वं तत्प्रकारकं गवयो गवयपद

यस्य साध्याभावः प्रमाणांतरेण निश्चितः स बाधितः यथा वह्निरनुष्णो द्रव्यत्वादिति अत्रानुष्णत्वं साध्यं [illegible] त
दभावउष्णत्वं स्पर्शनेन प्रत्यक्षेण गृह्यते इति बाधितत्वं व्याख्यानमनुमानं उपमितिकरणमुपमानं संज्ञासंज्ञिसंबं
धज्ञानमुपमितिः तत्करणं सादृश्यज्ञानं तथाहि कश्चिद् गवयशब्दार्थमजानन् कुतश्चिदारण्यकपुरुषाद् गोसदृशो
गवय इति श्रुत्वा वनं गतो वाक्यार्थं स्मरन् गोसदृशं पिण्डं पश्यति तदनंतरं अयं गवयपदवाच्य इत्युपमितिरुत्पद्यते

वाच्य इति ज्ञानमुपमितिरित्यर्थः उपमितित्वं चोपमिनोमीत्यनुभवसिद्धो जातिविशेषः ननूपमितिकरणमुपमानमि
त्युक्तं किं तदित्यत आह तत्करणमिति सादृश्यप्रकारकमित्यर्थः उपमितिकरणत्वं तस्य प्रतिपादयितुं प्रतिज्ञानीते
तथाहीति वाक्यार्थस्मरणो सदृशं पश्यतीति गोसादृश्यं पश्यन्नतिदेशवाक्यार्थं स्मरतीत्यर्थः अयं गवयशब्दवाच्य इति
गवये गवयपदवाच्य इत्यर्थः ननु गवयांतरे शक्तिग्रहाभावप्रसंग इति चेत् प्रमास्त गोसादृश्यविशिष्टपिंडदर्शनं करणं अति
देशवाक्यार्थस्मरणमवांतरव्यापारः उपमितिः फलमिति सारं तच्चोपमानं त्रिविधं सादृश्यविशिष्टपिंडज्ञानं असाधारणधर्म
विशिष्टपिंडज्ञानं वैधर्म्यविशिष्टपिंडज्ञानं तत्राद्यमुक्तमेवाद्वितीयो यथा खड्गमृगः कीदृश इति पृष्टे नासिकासदेक
शृंगोऽतिक्रांतगजाकृतिरिति श्रुत्वा कालांतरे तादृशं पिंडं पश्यन्नतिदेशवाक्यार्थं स्मरति तदनंतरं खड्गः

मिदमेव विवृतिरस्तु च्यते इह विकचसरोरुहे भ्रमर इत्यादौ प्रसिद्धपदसान्निध्याद् भ्रमरादेः शक्तिग्रहः शेषं सुगमं न व्यासु गवादि
पदानां व्यक्तावेव शक्तिः न तु जातावपि गौरवादिति मीमांसकास्तु विशेषणत्वेन गोत्वादेरेव प्रथममुपस्थितत्वा
द् गवादिपदानां गोत्वादावेव शक्तिः व्यक्तिलाभस्तु गोत्वं ह्याश्रयं विनानुपपन्नमित्याक्षेपादित्याहुः तदसत् विनाप्याक्षेपं
गोऽभ्ररत्नोत्पनेन न व्यक्तिप्रतीतेः प्राभाकरास्तु गवादिपदानां आनयनादिरूपकार्यान्विते गवादौ शक्तिः सर्वत्र कार्य
वाक्य एव व्युत्पत्तेः भूतले घट इत्यादि सिद्धवाक्ये तु न व्युत्पत्तिरित्याहुः तदसत् इह कोपं युर्याः सकलमनोरथदायिनी
करुणावेति सिद्धवाक्ये पामराणामपि व्युत्पत्तिदर्शनात् चैत्रः पचतीत्यादावाख्यातस्य कर्तरि शक्तिरिति वैयाकरणाः
तन्न गौरवात् किंतु कृत्य व तथा च गवादि [illegible] शक्तिग्रहे गृहीतशक्तिक गवादिशब्दस्तज्ज्ञानं करणं पदजन्यपदार्थ
स्मरणमवान्तरव्यापारः आकांक्षायोग्यतासन्निधितात्पर्यज्ञानं निसहकारीणि शाब्दबोधः फलमिति सारं इत्यवादः पदं चतु
र्विधं यौगिकं रूढं योगरूढं यौगिकरूढं च अवयवशक्तिर्योगः अवयवमात्रशक्तिकं यौगिकं यथा पाचकादिपदं समुदायशक्तिः
रूढिः समुदायमात्रकं शक्तिकं रूढं यथा विप्रादिपदं ब्राह्मणे समुदायशक्त्यैव रूढं न योगेन अवयवशक्त्या समुदायशक्त्या
चैकार्थबोधकं यत्पदं तद्योगरूढं यथा पंकजादिपदं अवयवशक्त्या पंकजत्वेन रूपेण कमलमेव बोधयति समुदायशक्त्या च
कमलत्वेन रूपेण अन्यतरान समुदायशक्तिरवगूपकी मो गकार्थ रूढ्यपर्ययोः स्वातंत्र्येण बोधकं यौगिकरूढं यथोद्भिज्जादिपदं
योगेन तरुगुल्मादिपदं बोधयति रूढ्योद्भिस चाध्वरे प्रसिद्धः शक्तिरिव लक्षणापि पदस्य वृत्तिः अपकेपल लक्षणा शक्यसंबंधो ल
क्षणा वर्तते तेन गंगायां घोष इत्यत्र गंगापदस्य प्रवाहसंबंधतीरे लक्षणा बीजं तात्पर्यानुपपत्तिः अन्यतरवप्रवाहे घोषतात्पर्या
नुपपत्त्या तीरे लक्षणा से स्यति तात्पर्यं च वक्तुरिच्छा वक्ताचाभिसंधा [illegible] पितातेन मोनादावव्याप्रि प्रस्तुता सा च लक्षणा त्रि
विधा जहत्स्वार्था अजहत्स्वार्था जहदजहल्लक्षणाभेदात् यत्रान्वितो न वाच्यार्थः सा त्राद्या यथा मंचाः क्रोशन्ति गंगायां घोष इत्यादौ यत्र वाच्यार्था

जहदजह

शक्ति

न्नपातातिरिक्तनामार्थे [illegible] भेदेनान्वयः

न्वयस्तत्र द्वितीयार्थयाप्रतियोगितायां तीरादेरन्वय इति रीत्या तदितरेषां च गमनेन्वयः यत्र वाच्यैकदेशबाधेनैकदेशान्वयस्तत्र तीरपाय
पास एव घटोस्तीत्यादौ अत्र तद्देशकालविशिष्टस्य बाधः न तु रूपेण राजपुरुष इत्यत्र राजपदस्य राजसंबंधिनि लक्षणा बहुव्रीह
वपि लक्षणा यथा चित्रगुरित्यत्र गोपदं गोस्वामिलक्षकं चित्रपदं तात्पर्यग्राहकं हंहे धवखदिरौ छिंधीत्यत्र धवखदिरयो
स्तदर्थपूर्वकारतया भासमानद्वित्वे च नार्थद्वित्वे लक्षणा कर्मधारये तु नीलोत्पलमित्यत्र न लक्षणा निषादस्थपतिं याजयेदि
त्यत्रापि कर्मधारयेन लक्षणा वेदबोधितयाजनानुपपत्त्या षष्ठीतत्पुरुषे तस्याधिकारकल्पनात् स्त्रीशूद्रौ नाधीयातामि
ति वेदस्य निषादाति रिक्तशूद्रपरत्वात् दध्ना जुहोतीत्यत्र द्वितीयालोपस्थले दधिपदस्य दधिकर्मत्वे लक्षणा घटो न पट
इत्यत्राभावार्थकनञो घटभिन्नत्वे लक्षणा घटं जानातीत्यादावाख्यातस्य मानि लक्षणा रथो गच्छतीत्यादावाख्यातस्य गमनानु
कूलव्यापारे लक्षणा प्रजयतीत्यादौ जयार्थकधातोः प्रकृष्टजये लक्षणा उपसर्गस्तु तात्पर्यग्राहकः इति संक्षेपः गच्छ ग
च्छसि चेत्कांत पंथानः संतु ते शिवाः ममापि जन्म तत्रैव भूयाद्यत्र गतो भवानित्यत्र त्वद्गमनानंतरं मम प्राणवियोगो भवि
ष्यतीति बोधार्थं जनास्त्वं वृत्त्यंतरं व्यंजनालंकारिकाः तन्न लक्षणायां तस्यांतर्भावात् अपामिमेरावक इत्यत्र मारणविके
गतसादृश्यबोधात् गौणी तु वृत्त्यंतरमेवेति मानं स्यात् स्याल्लक्ष्यमाणगुणसंबंधेन लक्षणा नातिरिक्तत्वात् इति लक्षणाविवरणं
ननु वृत्तिग्रहस्य पदे शाब्दबोधे नानंतरं गौरश्व इत्यादिवाक्यादपि शाब्दापत्तिः त्यात् इत्यत आह आकांक्षेति अत्र चकारेण तात्पर्य
ज्ञानं समुच्चीयते न या आकांक्षा योग्यता तात्पर्यज्ञानानि सन्निधिश्च शाब्दबोधे कारणानीत्यर्थः तेनाकांक्षादिविपर्यये
शाब्दाविपर्ययेपि को हानिः आकांक्षा व्युत्पादयति पदस्येति घटादि [illegible] लक्षणा पदस्य पदांतरविभक्तिपदं तस्य व्यति
रेकोभावः तत्प्रयुक्तं तत्प्रयोगं अन्वयाननुभावकत्वं शाब्दबोधानुपधायकत्वमाकांक्षेत्यर्थः सबंधात् 
स्यात्पदयोः नामनये त्यादि सूत्रं तात्पर्यगंतयोग्यदृष्टव्यं योग्यतामाह अर्थेति पयसा सिंचेदित्यत्र पयसि सेककरणत्व
स्याबाधितत्वात् तद्योग्यं सान्निधिं व्युत्पादयति पदानामिति अविलंबेन पदोपस्थितिः सन्निधिः क्वचिदुच्चारणं तदुपये

महेतत्तद्वर्णानुभवजनितसंस्कारकृपादेवसहकारिवलात्तत्तलेकोतन्यायेनसमूहालंबना॥

का॰ घे॰ ५

86

वर्णेतिरिक्तो वर्णव्यंग्यो गीतितात्पर्यं तेनमोनिष्फोटोतदभावेपिनशंकार्यंककलंकावकाशः अत्रवैयाकरणाः आविलंबेनपदोपस्थितिर्नेघटतेतत्कारणीभूतपदानुभवजनितसंस्कारस्यायोगात् वर्णानामाशुतरविनाशित्वेनपदस्यैवाप्रसिद्धेः सुतरांतदनुभवस्यापरिसो लमिकंपदंस्वीक्रियतेतदापूर्वविघ्नमेवास्माकंमतमित्याहुः तन्नमयाप्यमिकपदस्मरणासामंजस्यस्फोटस्यापिकिंचित्करत्वात् इतिस्फोटवादः सैंधवमानयेत्यादौतात्पर्यज्ञानादेवकचिद्धवणस्यकचिदश्वस्यबोधात्तस्यापिकारणत्वंसंजाघटीतिनानार्थानुरोधात्प्रकरणादिकं तात्पर्यग्राहकंद्वारमित्यादौ अपिहीत्यादिशाब्दज्ञानादेवशाब्दः अतःशब्दाध्याहारएवयुक्तः नतुप्रधानादिरूपार्थाध्याहारपदार्थविशेषजन्यपदार्थोपस्थितेरेववाशाब्दबोधजनकत्वात्

ततत्तद्वर्णानुभवजनितसंस्कारसहितचरमवर्णानुभवसहकृततत्तद्वर्णविषयबोधकत्वेनतदानुभवेनैवार्थबोधोपपत्तौव्यर्थःस्फोटस्वीकारः

त्वा

आकांक्षायोग्यतासन्निधिश्चवाक्यार्थज्ञानेहेतुः पदस्यपदांतरव्यतिरेकप्रयुक्तान्वयाननुभावकत्वमाकांक्षा अर्थाबाधोयोग्यता पदानामविलंबेनोच्चारणंसन्निधिः तथाचआकांक्षादिरहितवाक्यमप्रमाणम् यथागौरश्वःपुरुषोहस्तीतिनप्रमाणमाकांक्षाविरहात् अग्निनासिंचेदितिनप्रमाणंयोग्यताविरहात्प्रहरेप्रहरेअसहोच्चारितानिगामानयेत्यादिपदानिनप्रमाणंसान्निध्याभावात् वाक्यंद्विविधंवैदिकंलौकिकंचवैदिकमीश्वरोक्तत्वात्सर्वमेवप्रमाणंलौकिकंत्वाप्तोक्तंप्रमाणंअन्यदप्रमाणंवाक्यार्थज्ञानंशाब्दज्ञानंतत्करणंशब्दः इतियथार्थानुभवनिरूपणम्

दार्थोपस्थितेरेवशाब्दबोजत्वादितरथाघटःकर्मत्वमानयनंकृतिरित्यादितोपितदापत्तिरितिआकांक्षादिशून्यवाक्यस्यागमप्रमाणत्वंनिषेधयतितथाचआकांक्षादिकंशाब्देहेतुरित्युक्तेचतत्पर्थःअनाकांक्षाद्युदाहरणंदर्शयतिगोरश्वइतिवाक्यविभज्यतेवाक्यमितिईश्वरोक्तत्वादितिवेदःपौरुषेयोवाक्यत्वाद्भारतादिवदित्यनुमानात्तत्सिद्धेः ननुस्मर्यमाणकर्तृत्वमुपाधिस्तस्यभारतादौव्यापकत्वात् वेदेसाधनाव्यापकत्वेतिमाभाषिष्ठाः वेदेपितस्यसत्वात् अतोवृत्तावेदकर्ताइत्याद्यपिकिंवदंतिसर्वमेवेतिअवाधितविषयत्वात्सर्वमेवेत्यर्थः तेनात्माविजायतेपुत्रइत्यादिवेदस्याप्रामाण्येपिनक्षतिःस्मृतिपुराणेतिहासाचाराणांवेदमूलत्वेनप्रामाण्यंतमूलत्वेयदानामधुनानुपलभ्यतेनशाखाकाचिदुच्छिन्नेवेतिकल्प्यतेकेचित्तुयत्रवेदमूलकत्वंदृश्यतेतस्यैवप्रामाण्यंअन्यथासमतादिकालितावाक्यानामपितदापत्तेः नचयत्रकापिपूरीतात्वंतत्रप्रामाण्यंबृहस्पतिप्रणीतनास्तिकसूत्राणामपि

अवाधितवाक्यं

गा

के

लिङ्गोविध्यर्थइत्युच्यते भवतीति च यागनिष्ठं तत्र यागो मत्कृतिसाध्यो मदिष्टसाधनं चेति ज्ञानविषयः ११

केत्यत्राभिधेयो विधिर्ज्ञेयः स च प्र[illegible]यत्नजनकचिकीर्षाजनकज्ञानविषयः कृतिसाध्येष्टसाधनत्वमेवेष्टसाधनत्वाज्ञानात्तीगच्छेत्यतत्त इति नियमात् ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यादिका[illegible]स्थले [illegible]संध्यामुपासीतयावज्जीवमग्निहोत्रं जुहुयादित्यादि नित्यस्थले नैमित्तिकस्थले च चिकीर्षाद्वारा कृतिसाध्येष्टसाधनताज्ञानं प्रवृत्तिपूर्वंकारणं नित्योपि संध्यावंदनादौ प्रत्यवायपरिहारादिकमिष्टं कल्प्यते न कलंजं भक्षयेदित्यादौ न ज्ञाविध्यर्थाभावबोधात् अत्रप्रभाकरः कार्यत्वं विध्यर्थः प्रवृत्तिं प्रति कृतिसाध्यताज्ञानं वो [illegible] न कृतिसाध्ये न प्रवृत्तिः ननु विषभक्षणादौ प्रवृत्तिप्रसंग इति चेत् तदनुपायिनः इष्टसाधनता लिंगकं कृतिसाध्यतानुमितिरिष्टसाधनताज्ञानकालीनकृतिसाध्यताज्ञानं वा काम्यस्थले प्रवर्तकमतो नोक्तदोषः नित्यस्थले चाहमिदं [illegible] कृतिसाध्यसंध्यावंदनकः ब्रा[illegible]त्वे सति विहितसंध्याकालीनशौचादिमत्वादिति शौचादिमत्वप्रतिसंधानजन्य कृतिसाध्यताज्ञानं कृतिसमारधते अथाननुगम इति चेत् स्वविशेषणवत्ताप्रतिसंधानजन्यत्वमेव कृतिसाध्यताज्ञाने नुगतं स्वं पुरुषः तत्र काम्यस्थले इच्छैव विशेषणं नित्यस्थले च शौचादिकमेव तु व्रीयं प्रतिनेदं शोभनं अलघीयस्त्वात् सोपि विधिस्त्रिधा अपूर्वो नियमः परिसंख्या भेदात् तत्र केवलमप्राप्तौ विधिरपूर्वः यथा स्वर्गकामो यजेतेत्यादौ [illegible]

पक्षे नादे ९ प्राप्तत्वात् यत्रोभयोः प्राप्तावेको नियम्यते स द्वितीयः यथा व्रीहीनवहन्यादित्यादौ नखविदलनमुशलावहननप्राप्तौ मुशलावहननं नियम्यते सर्वत्र प्राप्तस्य क्वचिद्विधिस्तृतीयः यथा पंच पंचनखा भक्ष्या इत्यत्र सर्वेषां पंचनखानां भक्षणे प्राप्ते पंचैव पंचनखा भक्ष्या इति विधीयते शशकः शल्लकी गोधा खड्गी कूर्मश्च पंचमः पंचनखा ज्ञेया इति विधिविशेषः अर्थवादस्त्रिधा गुणवादानुवादभूतार्थवादभेदात् तत्राद्यो यथा आदित्यो यूपो यजमानः प्रस्तर इति प्रमाणांतरेण निर्णीतस्यार्थस्य ज्ञापको नुवादः यथाग्निर्हिमस्य भेषजमिति तत्कालेपि तदुरगज्ञापको भूतार्थवादः यथा जरायामप्ययं प्ररइत्यर्थवादः मंत्रस्तापः पुनेत्यादि इति मंत्रवादः नौशब्दो न प्रमाणांतरं संसर्गज्ञानं वानुमानादेव संभवति पदयतेन यादि शाब्दं न येत्यादि पदानि स्मारितार्थसंसर्गवंति आकांक्षादिमत्पदकदंबकत्वात् अन्य

विधि रत्यंतमप्राप्ते नियमः पाक्षिके सति तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयते ॥

[illegible]

बाक्यवदिति चेन्नानुपलब्धिविलक्षणस्य शब्दस्य तस्मीत्यनुभवसाक्षिकशाब्दस्यापलपितुमशक्यत्वात् अर्थापत्तिरपि प्रमाणांतरमस्ति
तथा हि पीनो देवदत्तो दिवा न भुंक्ते इति दृष्टे श्रुते वा दिवा भुंजानस्य पीनत्वं रात्रिभोजनं विनानुपपन्नं [illegible] मित्यनुपपत्तिधीर्भ
वति इयमेवार्थापत्तिः ततो यं देवदत्तो रात्रौ भुंक्ते इत्यनुभवो जायते इति मैवं मंस्थाः अयं देवदत्तो रात्रौ भुंक्ते दिवाऽभुंजानत्वे सति
पीनत्वात् इति केवलव्यतिरेक्यनुमानेनैव तत्सिद्धौ तस्याः किं वितर्करत्वात् अनुपलब्धेः प्रमाणांतरत्वं निराकृतमेव प्राक् सं
भवोपि न प्रमाणांतरं तथा हि सहि विधः संभावनात्मको निर्णयात्मकश्च तत्राद्यो न प्रमाणं यथा ब्राह्मणे चतुर्दश विद्या
संभवंतीति चतुर्दश विद्याश्च ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं छंदो ज्योतिर्निरुक्तं [illegible] यः ।
मीमांसा तर्कशास्त्रं च पुराणं धर्मशास्त्रं च विद्याश्चतुर्दशेताः स्युः पुरुषार्थैकसाधनका इति वेदांतस्य मीमांसायामंतर्भावः
वैशेषिकस्य तर्के सांख्यपातंजलपाशुपतवैष्णवरामायणभारतादीनां धर्मशास्त्रे पुराणं च ब्राह्मं स्कांदं पाद्मं मा
र्कंडेयं शैवं वैष्णवं गारोशं सौरं भागवतं भविष्यं ब्रह्मवैवर्तं लैंगं वामनं वाराहं कौर्मं मात्स्यं गारुडं ब्रह्मांडं
भेदादष्टादशधा वाशिष्ठं लैंगं नारसिंहं नंदीयं (नारद्यम) वामनीयं हंसतत्त्वसारं दौर्वासं शिवधर्मं कापिलं मानवं वारुणं
रेणुकं वायवीयं माहेश्वरं मारीचं भार्गवादिभेदादुपपुराणानि बहुधानि मनुयाज्ञवल्क्यविष्णुयमांगि
रसो वशिष्ठदक्षसांवर्त्तशातातपपाराशरगौतमशंखलिखितहारीतापस्तंबौशनसकात्यायनबात्साय
नबृहस्पतिदेवलनारदपैठीनसिप्रभृतिकृतानि बहूनि धर्मशास्त्राणि तस्माच्चतुर्दशविद्यानन्वायुर्वेदगांधर्व
वेदधनुर्वेदार्थशास्त्रभेदादुपवेदचतुष्टयमप्यस्ति कामशास्त्रस्यायुर्वेदेंतर्भावः नीतिशास्त्रशिल्पशास्त्राश्वशास्त्रगज
शास्त्रसूपकारशास्त्र [illegible] चतुःषष्टिकलाशास्त्राणां अर्थशास्त्रेंतर्भावः तस्मादष्टादश विद्याः इति चेत्सोयं वसमयिप्राते
पंचाप्यादिति निर्णयात्मकः संभवोऽनुमानेंतर्भवति इह वटे यक्षस्तिष्ठतीत्यैतिह्यमपि न प्रमाणांतरं किं त्वज्ञातमूलवक्तृकः
शब्दः चेष्टापि न प्रमाणांतरं किं त्वनुमानप्रयोजकैवेत्यस्माच्चेष्टेव प्रमाणमिति सिद्धं एतेनानुपलब्ध्यादिप्रमाण्यं [illegible]

ज्ञाननिष्ठं न वा इति तत्प्रकारकत्वात्मकं प्रामाण्यं स्वतो ग्राह्यं परतो ग्राह्यं वेति विप्रतिपत्तिः तदप्रामाण्यग्राहकयावज्ज्ञानग्राहकसामग्रीग्राह्यमि
दमेव स्वतोग्राह्यमिति किंचिदितीयस्यार्थः ज्ञानप्रामाण्यं ज्ञाननिष्ठाप्रामाण्यग्राहकयावती ज्ञानग्राहिकानुव्यवसायादिरूपा सामग्री तद्ग्रा
ह्यमितीदमेव ज्ञप्तौ स्वतस्त्वमुच्यते यत्र गुणापुंजे ग्रहस्यमिति भ्रमः पश्चादिदं ज्ञानमप्रमेति ज्ञानं ततो द्वितीयं ज्ञानं प्रमेति प्रमा तत्र तृतीय
ज्ञानग्राह्यत्वस्यानुव्यवसायगतप्रामाण्यस्य सत्वेपि द्वितीयज्ञानस्य व्यवसायनिष्ठाप्रामाण्यग्राहकत्वेनाप्रामाण्यग्राहकत्वाभावात् स्वत
स्त्वेन संज्ञा घटीति अत स्वदिति प्रामाण्यधारावत्तायदार्थः यत्रायं घट इति प्रमानंतरमिदं ज्ञानमप्रमेयप्रमा तत्र धूलीपटलेयं धूम
इति ज्ञानप्रकारकत्वस्य धूलीपटलेऽसत्त्वं स्वतो ग्राह्यत्वस्य प्रामाण्येऽसत्वात् बाधः अतोऽप्रामाण्यग्राहकेति सिद्धसाधनवारणा
र्थं यदिति नन्वनुव्यवसायेन कथं प्रामाण्यं गृह्यते इति चेत् घटमहं जानामीत्यनुव्यवसायो घटं घटत्वं समवायं च विषयीकु
र्वन् तानि प्रकारीभूतं घटमात्मानं तत्संबंधि व्यवसायं च विषयीकरोतीत्येवं सति पुरो इति प्रकारसंबंधस्यैव प्रमापदा
र्थत्वेन स्वतराव प्रामाण्यं गृह्यते इति मुरारिमिश्राः अनुव्यवसायात्मकमेव संवेदनं स्वतः प्रकाशमिति मान
मानमेयविषयत्वात् त्रिपुटी तु उच्यते स्वप्रकाशसामग्र्यादेव स्वात्मानमिव स्वत्वतोऽपि प्रामाण्यं स्वतराव गृह्यते इति
प्रभाकराः अयं घट इति ज्ञानानंतरं घटे ज्ञाततानामफलं भवति ततो घट इति ततः प्रत्यक्षं पश्चात्तया ज्ञानमात्रस्यातीन्द्रि
यत्वात् ज्ञानं तन्निष्ठं प्रामाण्यं चाहं घटत्वप्रकारकज्ञानवान् घटत्वप्रकारकज्ञाततावत्त्वादित्यनुमीयते तस्मा

स्वतो ५॥

त्वत्तराव प्रामाण्यं गृह्यते ग्राह्यत्वं च ज्ञानग्राहकातिरिक्तानपेक्षत्वमिति भाट्टाः तन्नेति गौतमीयाः नाबामय
मभिप्रायः इदं जलज्ञानानंतरं मनभ्यासदशायां मम प्रन्नं ज्ञानं प्रमा न वेति संदेहो न स्यात् इति तत्र पूर्वं प्रामा
ण्यस्य निश्चितत्वात् स्वप्रकाशत्वमपि दुर्वचं चाक्षुषत्वादिना स्वात्मनो विषयीकर्तुमशक्यत्वात् ज्ञानविषयत्वाते
रिक्तज्ञाततायां मानाभावात् तो निषेधकोटिरेव बलीयसीत्यलमतितर्ककर्कशविचारभारधारणेन नापि गलं
ष्य कथं परतः प्रामाण्यं गृह्यते इति चेदुच्यते प्रथमं जलज्ञानं जलत्वयोर्निर्विकल्पकं ततः इदं जलमिति विशिष्टज्ञानं तदइति

ततः प्रवृत्तिस्ततो जललाभस्तदनंतरं पूर्वोत्पन्ने जलज्ञाने प्रमा समर्थप्रवृत्तिजनकत्वात् यत्रैवं तन्नैवं यथा अप्रमेति व्यतिरेकिणा यथा घटज्ञानमिति अन्वयदृष्टौ तस्यापि संभवे नान्वयव्यतिरेकिणा वा प्रामाण्यं निश्चीयते इति ज्ञप्तौ परतस्त्वं प्रमाया गुणाजन्यत्वादुत्पत्तौ परतस्त्वं गुणस्य प्रमासाधारणकारणत्वात् यथा प्रत्यक्षे सन्निकर्षः अनुमितौ व्याप्तिविशिष्टपरामर्शः उपमितौ सादृश्यज्ञानं शाब्दे शब्दज्ञानं एवमप्रामाण्यमपि परतो गृह्यते इदं च मीमांसकानां अपि संमतं पुरोवर्तिनि प्रकाराभाववत्प्रकारानुव्यवसायेनानुपस्थितत्वात् अप्रमायाः पित्तमंडूकजसो जन्यत्वात् चाकचिक्यदूरत्वादिदोषजन्यत्वादुत्पत्तौ परतस्त्वं दोषस्य अप्रमासाधारणकारणत्वात् इत्यास्तां विस्तरः अयथार्थानुभवं विभजते अयथार्थेति त्रैविध्यं दर्शयति संशयेति संशयं लक्षयति एकस्मिन्निति एकस्मिन् धर्मिणि एकस्मिन्नेव पुरोवर्तिनि पदार्थे विरुद्धव्याधिकरणा ये नाना धर्माः स्थाणुत्वपुरुष

अयथार्थानुभवस्त्रिविधः संशयविपर्ययतर्कभेदात् एकस्मिन् धर्मिणि विरुद्धनानाधर्मवैशिष्ट्यावगाहि ज्ञानं संशयः यथा स्थाणुर्वा पुरुषो वेति मिथ्याज्ञानं विपर्ययः यथा शुक्ताविदं रजतमिति

त्वादयः तेषां वैशिष्ट्यं संबंधस्तदवगाहिज्ञानं संशयः इत्यर्थः घटपटाविति समूहालंबनज्ञानस्य घटत्वपटत्वरूपविरुद्धनानाधर्मवैशिष्ट्यावगाहित्वादतिप्रसंगवारणाय एकस्मिन्निति घटः पृथिवीति ज्ञाने एकस्मिन् धर्मिणि घटे घटत्वपृथिवीत्वरूपनानाधर्मवैशिष्ट्यावगाहित्वादतिप्रसक्तिरतो विरुद्धेति परत्वाविरुद्धघटत्ववान् घट इति ज्ञानेतिप्रसक्तिवारणाय नानेति उदाहरति यथेति स त्रिविधः साधारणधर्मधीजन्यो ऽसाधारणधर्मधीजन्यो विप्रतिपत्तिजन्य विशेषादर्शनं कोटिद्वयस्मरणं संशयमात्रे हेतुः तत्राद्य उपदर्शितः उच्चैस्तरत्वं तत्र साधारणधर्मः स्थाणुत्वनिष्ठा एकं कोटरादिमत्त्वं पुरुषत्वनिष्ठा करादिमत्त्वं वा विशेषः स्थाणुत्वपुरुषत्वे च कोटिद्वयं द्वितीयो यथा शब्दत्वं नित्यानित्यव्यावृत्तं शब्दमात्रवृत्ति इति ज्ञाने शब्दो नित्यो न वेति संशयः तृतीयो यथा प्रामाण्यं स्वतो ग्राह्यं परतो वेति संशयः विपर्ययं लक्षयति

मित्याति उदाहरति यथेति … लक्षयति व्याप्येति अत्र वह्न्यभावो व्याप्यः धूमाभावो व्यापकः उदाहरति यथेति
यद्यपि तर्कस्य विपर्ययान्तर्गतत्वेन पृथग्विभागोऽनुचितः तथापि प्रमाणानुग्राहकत्वात्तदुचितमिति बोध्यं
प्रत्युपरीतं … संशयो मनसि स्थिते दृष्टविशेषेण भिन्नविशेषेण धातुदोषेण वा जन्यते
…ऽतो स च मानसः विपर्ययेऽन्तर्भूतः इदं … अनध्यवसायस्य विशेषादर्शने न जन्यते स च विपर्यय एव
… तृतीयः प्रदेशे यथार्थानुभवत्वेन स्मृतिं विभजते स्मृतिरपीति द्वैविध्यं कथयन्ति यथार्थेत्ति यथा
र्था … स्मृति … संस्कारसंवेदनेन प्रमायाः स्मृतिकारणत्वमिति भावः अप्रमाजन्येति इदं रजतमि

मिथ्याज्ञानं विपर्ययः यथा शुक्ताविदं रजतमिति व्याप्यारोपेण व्यापकारोपस्तर्कः यथा य
दि वह्निर्न स्यात्तर्हि धूमोऽपि न स्यादिति स्मृतिरपि द्विविधा यथार्थाऽयथार्था च प्रमाजन्या यथा
र्था अप्रमाजन्याऽयथार्था सर्वेषामनुकूलवेदनीयं सुखं प्रतिकूलवेदनीयं दुःखम्

त्यप्रमातो रजतत्वेन शुक्तिस्मरणमयथार्थं इति बुद्धिं निरूप्य सुखं निरूपयति सर्वेषामिति सर्वा
त्मनामनुकूलमिति वेद्यं यत्तत्सुखमित्यर्थः इदं लक्षणमनुकूलत्वं अहं सुखीत्यनुभवसिद्धसुखत्वजाति
मद्धर्ममात्रासाधारणकारणको गुणो वा सुखं तच्चतुर्विधं वैषयिकाभिमानिकमानोरथिकाभ्यासिक
भेदात् तत्र विषयसाक्षात्कारजं प्रथमं राज्याधिपत्यादिजं द्वितीयं विषयध्यानजं तृती
यं सूर्यनमस्कारादिजं तुरीयं दुःखमाह प्रतिकूलेति प्रतिकूलत्वं च दुःखत्वजातिम
दधर्ममात्रासाधारणकारणगुणो दुःखं इदमपि पूर्ववद्बोध्यं मतं चतुर्विधम् ॥ ५ ॥ ५

स्मृतिना दुःखाभाव-



न्टी०चं०

४२

इच्छां निरूपयति इच्छेति। काम इति पर्यायः। इच्छात्ववती इच्छा सा द्विविधा फलेच्छा उपायेच्छा फलं सुखादिकं उपायो यागादिः। द्वेषं निरूपयति क्रोध इति द्वेषत्वं अनुभवसिद्धं द्वेषत्वजातिमान् द्विष्टसाधनताज्ञानजन्यगुणो वा द्वेषः। प्रयत्नं निरूपयति कृतिरिति प्रयत्नत्वजातिमान् प्रयत्नः स त्रिविधः प्रवृत्तिर्निवृत्तिर्जीवनयोनिभेदात् इच्छाजन्यो गुणः प्रवृत्तिः द्वेषजन्यो गुणो निवृत्तिः जीवनादृष्टजन्यो गुणो जीवनयोनिः स च प्राणसंचारकारणं धर्ममाह विहितेति वेदविहिते स्वर्गः सवकर्मनाश्यो जलस्पर्शकीर्तनभोगानत्वज्ञानादिना नश्यति अधर्ममाह निषिद्धेति वेदेनेत्यावान् सच भोगप्रायश्चित्तज्ञानादिना नश्यति एतावेवादृष्टमिति कथ्यते वासनाजन्यो च वासनाचाविलक्षणसंस्कारः तत्सद्भावे च चैत्रस्य शरीरादिकं चैत्रविशेषगुणजन्यं कार्यत्वे सति चैत्रस्य भोगहेतुत्वात् चैत्रप्रयत्नजन्यकुसुमवर्यकादिवदित्यनुमानं लाघवमनुसृत्य बुद्ध्यादिगुणानामिदानीं युगपत् दृष्टिमाह बुद्ध्यादय इति

इच्छा कामः क्रोधो द्वेषः कृतिः प्रयत्नः विहितकर्मजन्यो गुणो धर्मः निषिद्धकर्मजन्यस्त्वधर्मः बुद्ध्यादयो ह्यात्ममात्र विशेषगुणाः बुद्ध्यादिप्रयत्ना नित्या अनित्याश्च नित्या इच्छा ईश्वरस्य अनित्या जीवस्य संस्कारस्त्रिविधः वेगो भावना स्थितिस्थापकश्चेति वेगः पृथिव्यादिचतुष्टयमनोवृत्तिः अनुभवजन्या स्मृतिहेतुर्भावना आत्ममात्रवृत्तिः अन्यथात्वकृतस्य पुनस्तदवस्थापकः स्थितिस्थापकः कटादिपृथिवीवृत्तिः

अत्र नेत्र पद मन धारणार्थं संस्कारं विभजते संस्कारेति सामान्यगुणात्मकविशेषगुणोभयवृत्तिगुणत्वव्याप्यजातिमान् संस्कारः द्वितीयादिपतनासमवायिकारणं वेगः स द्विधा कर्मजो वेगजश्च तत्राद्यो नोदनोत्पादककर्मजन्यः शरादौ पूर्वोक्तः वेगजकपालजन्यः घटे द्वितीयः तस्य कपालवेगजन्यत्वात् भावनामाह वेगदिति भावनां लक्षयति अनुभवेति आत्मादिवारणाय प्रथमदलं अनुभवध्वंसवारणाय द्वितीयदलं अत्रानुभवउपेक्षात्मिका बोध्यः इदं तु बोध्यं उद्बुद्धसंस्कारस्य स्मृत्युपधायकः उद्बोधकं च चिंतनादिकं तदुक्तं सदृशादृष्टचिंताद्याः स्मृतिबीजस्य बोधका इति अत्रेदं बोध्यः संस्कारं प्रति स्मरणम [illegible] पिकारणं

स्पृ० च०

४२

स्मृदिनापापं गृह- [illegible]

स्थितिस्थापकमाह अन्यथेति पृथिवीमात्रसमवेतसमवेतसंस्कारत्वव्याप्यजातिमत्त्वं तत्त्वं ग्राह्यमाह कटादीनि आदिना का
र्मुकादेः परिग्रहः इति संस्कारनिरूपणम् अथ गुणानां साधर्म्यं वैधर्म्यं प्रक्रियाद्व्यकर्मभिन्नत्वे सति सामान्यवान् गुण इति सिद्धं
तमेव प्रकृरूपादिचतुष्टयसांसिद्धिकद्रवत्वस्नेहादिदशभावनानां विशेषगुणत्वं तच्च पृथिवीसमवेतसमवेतद्विंद्रियग्राह्यसां
सिद्धिकद्रवत्वभावनान्यत्वविशिष्टगुणत्वापरजात्यनधिकरणत्वे सति गुरुत्वान्यगुणत्वं संख्याद्यष्टनैमित्तिकद्रवत्व
स्थितिस्थापकवेगानां सामान्यगुणत्वं रूपादिचतुष्टयपरत्वापरत्वगुरुत्वद्रवत्वस्नेहस्थितिस्थापकवेगानां मूर्तवृत्तिगुणत्वं
शब्दादिदशभावनानाममूर्तवृत्तिगुणत्वं संख्यादिपंचानां मूर्तामूर्तोभयवृत्तित्वं एकत्वभिन्नसंख्यैकपृथक्त्वभिन्नपृथक्त्वसंयोग
विभागानामनेकवृत्तिगुणत्वं तदन्येषां गुणानामेकैकवृत्तिगुणत्वं रूपादिचतुष्टयशब्दानां बाह्यैकेंद्रियग्राह्यगुणत्वं सं
ख्यादिसप्तद्रवत्वस्नेहवेगानां द्वींद्रियग्राह्यगुणत्वं ——— बुद्ध्यादिषट्कस्यांतरिंद्रियग्राह्यगुणत्वं गुरुत्वधर्माधर्म
स्थितिस्थापकभावनानाम् अतींद्रियगुणत्वं अपाकजरूपादिचतुष्टयं परममहत्परिमाणैकपृथक्त्वगुरुत्वसांसिद्धिकद्रवत्व
स्नेहवेगस्थितिस्थापकानां कारणगुणपूर्वकत्वं जन्यद्रव्यवृत्तिविशेषगुणानाम् कारणगुणपूर्वकत्वं संयोगविभा
गवेगानां कर्मासमवायिकारणकत्वं कारणगुणासमवायिकारणत्वं च संयोगविभागशब्दाद्यश्च भावनानामव्या
प्यवृत्तिगुणत्वं बुद्धीच्छाप्रयत्नद्वेषभावनानां सविषयत्वं गंधसंयोगादिचतुष्टयसुखदुःखद्वेषधर्माधर्मसंस्कारा
णामनित्यगुणत्वं तदितरगुणानां नित्यगुणत्वं वैधर्म्यपूर्ववद्बोध्यं ॥ इति श्रीसिद्धांतचंद्रोदये गुणविशेषनि
रूपणं नाम तृतीयपरिच्छेदः अथ स्यार्थः पृथिवीसमवेताः संख्यादयः तत्समवेता द्वींद्रियग्राह्यसांसिद्धिकद्रव
त्वभावनान्यत्वविशिष्टगुणत्वापरजातयः संख्यात्वादयः तदनधिकरणत्वं गुरुत्वान्यगुणत्वं चावेशेषगुणे वर्तते
इति कृत्वा समन्वयः संयोगादिवारणाय विशेषणं गुरुत्वे व्यभिचारवारणाय विशेष्यं स्नेहे व्याप्तिवारणाय पृथिवी
समवेतसमवेतेति रूपादावसंभववारणाय द्वींद्रियग्राह्येति द्रवत्वस्य द्वींद्रियग्राह्यत्वात् तद्व्यसांसिद्धिकद्रवत्वेऽपा

सावी

ल. दे. ए. २"

प्रिवारणायसांसिद्धिकद्रवत्वान्यत्वेतिसंस्कारत्वमादायभावनायामव्याप्तिवारणायभावनान्यत्वेति क्रमप्राप्तं कर्मणः स्वरूपमाह
चलनेतितल्लक्षणामुदीरितमेवप्राक् उत्क्षेपणं लक्षयति उर्द्धेति उर्द्धदेशस्य हस्तेन यः संयोगस्तस्या समवायिकारणं मुत्क्षेपणा
मित्यर्थः एवमग्रेपि नन्वभ्रमणरेचनस्पंदनतिर्यग्गमनोर्द्धज्वलनानामतिरिक्तत्वेन कुतः पंचत्वमतआह अन्यत्सर्वमिति
इतिश्रीकर्मविशेषनिरूपणं चतुर्थः परिच्छेदः सामान्यं निरूपयति नित्यमिति आश्रयमाह द्रव्येति परसामान्यमाह पर



अपकर्षणदारु अपकर्षतित्वमेति, इतिश्रीपंचमः परिच्छेदः विशेषं निरूपयति व्यावर्तका इति स्वतः इत्यर्थः इतिश्री षष्ठः परिच्छेदः समवायं निरूपयति

चलनात्मकं कर्म उर्द्धदेशसंयोगहेतुरुत्क्षेपणं अधोदेशसंयोगहेतुरपक्षेपणं शरीरसंयोगे सन्निकृष्टहेतु राकुं
चनं विप्रकृष्टसंयोगहेतुः प्रसारणं अन्यत्सर्वं गमनं नित्यमेकमनेकानुगतं सामान्यं द्रव्यगुणकर्मवृत्ति परं
सत्ता अपरं जातिर्द्रव्यत्वादि नित्यद्रव्यवृत्तयो व्यावर्तका विशेषाः नित्यसंबंधः समवायः अयुतसिद्धवृत्तिः ययो
रुभयोर्मध्ये एकमविनश्यदपराश्रितमेवावतिष्ठते तावयुतसिद्धौ अवयवावयविनौ गुणगुणिनौ क्रियाक्रि
यावंतौ जातिव्यक्ती विशेषनित्यद्रव्ये चेति अनादिः सांतः प्रागभावः उत्पत्तेः पूर्वं कार्यस्य सादिरनंतः प्रध्वंसः
उत्पत्त्यनंतरं कार्यस्य त्रैकालिकसंसर्गावच्छिन्नप्रतियोगिकोत्यंताभावः यथा भूतले घटो नास्तीति तादात्म्यसंबं
धावच्छिन्नप्रतियोगिकोन्योन्याभावः घटः पटो न भवति





नित्य इति स्यान्नमाह अयुतसिद्धेति ननु युतसिद्धपदेन किं ग्राह्यं तत्राह ययोरिति उक्तं चैतावयुतसिद्धौ द्वौ ज्ञातव्यौ य
यो र्द्वयोः अविनश्यदेकमपराश्रितमेवावतिष्ठते तावयुतसिद्धौ विनश्यदवस्थायामपराश्रितत्वेनायुतसिद्धत्वं
न स्यादत उक्तं अविनश्यदिति उदाहरति अवयवेति इतिश्रीसिद्धांतचंद्रोदये समवायनिरूपणं नाम सप्तमः परिच्छेदः सम्प्र
त्यभावं लक्षयति अनादिरिति घटादिकारणाय पृथग्दलं पटरूपोत्पन्नकारणाय इति तीयदलं नन्वभावः कस्मिन्काले सीत्यत आह
उत्पत्तेरिति कार्यस्योत्पत्तेः प्राक् स्वप्रतियोगिसमवायिकारणवृत्तिरित्यर्थः अयं प्रागभावः कथं सिद्ध्यति इति चेत् तत्स्यापि



परं
इति कपालघटयोर्मध्ये एको घटो ऽविनश्यन्नपरं कपालमाश्रितमेवावतिष्ठते ७

अनेकाश्रितो धर्मः



सामग्र्या मुत्पन्नस्य पुनरुत्पत्तिः साध्वंसेन नास्तिद्धिः इह कपाले घटो भविष्यतीति प्रतीतिरपि मानं इति प्रागभावनिरूपणं ध्वंसं लक्ष-
यति सादिरिति उत्पत्तिरिति कार्यस्योत्पन्नं तरं स्व प्रतियोगि समवायिकारणवृत्तिरित्यर्थः स च ध्वस्त इति प्रत्ययः विषयः अत्यन्ता-
व ३ वं दर्शयति त्रैकालिकेति त्रैकालिकत्वसति संसर्गावछिन्नप्रतियोगिकोत्यंताभावः ध्वंसप्रागभाववारणाय त्रैकालिकेति
भेदवारणाय संसर्गेत्यादि उदाहरति पथेति स द्विविधः एकपर्याप्तधर्मावछिन्नप्रतियोगिताकः अनेकपर्याप्तधर्मा-
वछिन्नप्रतियोगिताकश्च तत्राद्यो घटत्वादिः द्वितीयोऽभयत्वादिः अयमेव व्यासज्यवृत्तिधर्म इत्युच्यते सामयिकाभा-
वो नाङ्गीक्रियते घटवति भूतले घटाभावस्य सत्वेऽपि सामग्र्यभावात् तत्प्रतीत्यभावः सा च सामग्री भूतलघटसंयोगप्रा-
गभावध्वंसान्यतरत् तादृश प्रतीति कालीन भूतलादिकं च प्रतियोगितावछेदकेक्यपि एक प्रतियोगिनां तयोः संसर्ग-
भेदेन च हेतुत्वं विशेषाभावसमुदायो सामान्याभावो नातिरिक्तः एवं च अनवस्था सा ध्वंसेन द्वितीयाभावो भावस्वरूप एवेति
अप्रदायविदः भावस्यापि अधमुखत्रमाणगम्यत्वासंभवेन तृतीयाभावः प्रथमाभावस्वरूपः इति नवीनाः इत्यास्तां
विस्तरः अन्योन्याभावं लक्षयति तादात्म्येति इति श्री अभावविशेषनिरूपणं नामाष्टमः परिच्छेदः अथ प्रमाणप्रमेय
संशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासछलजातिनिग्रहस्थानानां तत्त्वज्ञा-
नान्निःश्रेयसाधिगम इति न्यायस्य प्रथमसूत्रे षोडशपदार्थानां प्रतिपादितत्वात्कथं सप्तत्वमत आह अन्येषामिति
तथा च तेषां साक्षान्मोक्षोपयोगित्वेन तथा विभागेऽप्यत्र रपि प्रतिपादितत्वादिति भावः कथमन्तर्भाव इति चेन्नेशामयप्र-
माणस्य द्रव्यगुणयोरन्तर्भावः आत्माशरीरेन्द्रियार्थबुद्धिमनः प्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयमिति प्रमेयसूत्रे त-
त्राद्यानां त्रयाणां द्रव्ये च सुखादिविषयरूपादिपंचार्थानां गुणे बुद्धेर्गुणे मनसो द्रव्ये धर्माधर्मात्मकप्रवृत्तेर्गुणे रागद्वेष
मोहात्मक दोषस्य गुणे प्रेत्यभावो मरणोत्तरं जन्म मरणं च चरमशरीरप्राणसंयोगध्वंसः आद्यशरीरप्राणसंयोगो

तर्क चं०

४४

जन्मसुखदुःखसंवेदनात्मकफलस्य गुणो दुःखस्य गुणोऽपवर्गस्याभावे स च दुःखध्वंसरूपः संशयरूपगुणोस्याप्यनया का
मनाविषयस्य यथायथं द्रव्यादेः मनसो दिदृक्षा तस्य पर्यायं द्रव्यादेः प्रामाणिकत्वं नाभ्युपगता धीसिद्धा तस्य च यथायथं
द्रव्यादेः प्रतिज्ञाद्यवयवस्य तर्कस्य निर्णयस्य चैतच्च मुमुक्षुकथारूपवादस्य विजिगीषुकथारूपजल्पस्य च स्वपक्षस्थापन
हीनकथा वितंडाया अगुणो हेत्वाभासानां यथोचितं द्रव्यादिष्वंतर्भावः अभिप्रायांतरेण प्रयुक्तस्यार्थांतरं परिकल्प्य दूषणाभि
धानं छलं तस्य गुणो असदुत्तरं जातिस्तस्या अपि तत्रपराज्ञेयहेतुर्निग्रहस्थानं तच्च प्रतिज्ञाहानिः प्रतिज्ञांतरं प्रतिज्ञाविरो
धप्रतिसंन्यासहेत्वंतरं अर्थांतरं निरर्थकं अविज्ञातार्थं अपार्थकं अप्राप्तकालं न्यूनमधिकं पुनरुक्तं अननुभाषणं

अन्येषां सर्वेषां पदार्थानां यथायथमुक्तेष्वंतर्भावात्सप्तैव पदार्था इति सिद्धं कणादन्यायमतयोर्बाल
व्युत्पत्तिसिद्धये अन्नंभट्टेन विदुषा रचितस्तर्कसंग्रहः इति श्रीतर्कसंग्रहप्रकरणं समाप्तम्

अज्ञानं अप्रतिभा सनातानुज्ञा विक्षेपः पर्यनुयोज्योपेक्षणं निरनुयोज्यानुयोगः अपसिद्धांतः हेत्वाभासाश्चेति
बहुविधं यथायथं द्रव्यादाविति ननु मणेः सत्वे वह्निना दाहानुत्पादनात् दाहानुत्पादशक्तिरस्तीति चेन्न तत्तेजकाभावविशि
ष्टमण्यभावस्यापि दाहकारणत्वेन तस्याभावात् नापि शक्तिरूपं पदार्थांतरं तच्च तद्भिन्नत्वे सति तद्गतभूयोधर्मव
त्वं भुक्तिरूपे नातिरिक्ता किंतु भस्मादिसंयोगसमानकालीनास्पर्शा स्पर्शप्रतियोगिकप्रागभावसहितभस्मा
दसंयोगध्वंस इति संक्षेपः इति श्रीसिद्धांतचंद्रोदये अतिरिक्तपदार्थनिरूपणखंडनं नाम नवमः परिच्छेदः ९
पदार्थज्ञानस्य परमप्रयोजनं मोक्षः इत्यामनंति स च स्वर्गादिरिति मीमांसकाः नित्यसुखाभिव्यक्तिरिति तदेकदेशिनः
अहंकारनिवृत्ताबोदासीन्यमिति सांख्ययोगाः बुद्ध्यादिशक्तेर्वा स्याविद्याप्रभवमिथ्याज्ञाननिवृत्तौ स्वस्वरूपावधि

शि चं०

४४

97

नसाधनमननसाधनत्वंपदार्थज्ञानेसंजाघटीति यावत्सतितत्वज्ञानेशरीर[illegible]मूढेनवाभोगततत्वज्ञान[illegible]पुत्रादावात्मत्वीयपद॥





गमइतिवेदंतिनः सारूप्यसालोक्यसामीप्यसायुज्यभेदाच्चतुर्विधः इति सगुणोपासकाः अपरा धीनेति चार्वाकाः उक्षगात् रित्यपि केचित् तत्सर्वं धीमता चिंत्यं अपितु आत्यंतिके काशिविंशतिदुःखध्वंसः आत्यंतिकत्वं च स्वसमानाधिकरणदुःख प्रागभावासमानकालीनत्वं दुःखानि चैकविंशतिः शरीरं षडिंद्रियाणि षड्विषयाः षड्बुद्धयः सुखं दुःखं चेति दुःखा[illegible]संगित्वाच्छरीरादेर्गौणादुःखत्वं तथा सर्वाण्यारे द्रष्टव्यः श्रोतव्यो मंतव्यो निदिध्यासितव्य इति श्रुतेरात्मज्ञानसाधनानि दिध्यासित्वाभिमानरूपमिथ्याज्ञानस्य नाशः तेन दोषाभावः तेन प्रवृत्त्यनुत्पत्तिः ततस्तात्कालीनशरीरेणाकायव्यूहेन वा भोगतत्त्वज्ञानाभ्यां प्रारब्धकर्मणां नाशः ततो जन्माभावः नित्यनैमित्तिकैरेव कुर्वाणो दुरितक्षयं ज्ञानं च विगलीकुर्वन् अभ्यासेन च पाचयेत् अभ्यासात् पक्वविज्ञानैककेव[illegible]तत्त्वज्ञानद्वारा मुक्तिहेतुर्वे [illegible]लभते नर इत्यादिवचनात् तत्रैव विदित्वा तिमृत्युमेतीति श्रुतेश्च सगुणोपासकानां काशीमरणादेरपि तत्त्वज्ञानद्वारा मुक्तिहेतुत्वं अत एव परमेश्वरः काश्यां तारकमुपदिशतीति सारं इति श्रीसिद्धांतचंद्रोदये मोक्षनिरूपणं नाम दशमः परिच्छेदः इति श्रीकौशिकगोत्रोद्भवसामशाखाध्यायिना पंपुरिवासि वैकुंठदिक्षितात्मजेन शेषीलाम सतीगर्भसंभवेन महाराष्ट्रजातीयचित्रोपनामनगरनिकेतं श्रीकाशीनाथभट्टशिष्येण द्राविडजातीयेन[illegible]सधूर्जटिदीक्षितेन कुतुहलादतीतपंचसप्त[illegible]काष्टशतोत्तरचतुःसहस्रवर्षके कलियुगे प्रकटिते पंचदशशतग्रंथाकिरणालंकृते सिद्धांतचंद्रोदये समाप्तिमलसति तमामस्तु मम स्तु॥ ६८२ • इतिश्रीसिद्धांतचंद्रोदय समाप्तं शुभमस्तु [illegible]सबासी